[दी] प्रमात्वेन निर्श्चीयमानतया तथात्वापत्तिरिति । न च सति विशेपदर्शने विपर्ययनिश्चयोऽकिञ्चित्करः, तत्सत्त्वेपि विशेपदर्शनेन प्रत्यक्षोत्पाददादिति वाच्यम्; विशेषदर्शनेन तन्नाशानन्तरमेव प्रत्यक्षोदयात् ।

[ग] ञ नपरामर्शादीनम् । (तथात्वापत्तिरिति) यथायोग कार्यप्रतिबन्धकत्वस्य कार्यजनकत्वस्य चापत्तिरित्यर्थ । तुल्ययुक्त्या प्रामाण्यनिश्चयेपि निश्चितप्रामाण्यकत्वस्य तत्रापि च तथात्वापेक्षायामनवच्छिन्नप्रामाण्यग्रहधारायाः कार्यग्रहविरोधित्व दावपेक्षिततया स एव न स्यात्, प्रतिबन्धकविशेषणपरम्पराया अनवस्थितिश्चेति तत्र तत्र प्रामाण्यनिश्चयो यदि नापेक्ष्यते तदा तुल्यं प्रकृतेपीति भाव । अगृहीताप्रामाण्यकत्वेन प्रतिबन्धकतामतेपि तद्घटकाप्रामाण्यग्रहे अनिश्चिताप्रामाण्यकत्वविशेषण, तत्र चागृहीताप्रामाण्यकत्वविशेषणमित्येव क्रमेण अनवस्थितिरिति तु नाशङ्कनीयम्; प्रतिबन्धकीभूतनिश्चयविशेषणागृहीताप्रामाण्यकत्वघटकाप्रामाण्यग्रहे निश्चिताप्रामाण्यकत्वानिवेश त्। तत्राप्रामाण्यनिश्चयदशायां कार्यवारणाय तदप्रामाण्यनिश्चयविशिष्टविपर्ययनिश्चयादीनां अगृहीताप्रामाण्यकत्वानवच्छिन्नानां प्रतिबन्धकत्वान्तरस्यैव कल्पनीयत्वात् । तादृशाप्रामाण्यनिश्चये चानिश्चिताप्रामाण्यकत्वावशेषण प्रामाण्यग्राभावस्य विशेषणत्वोपगमात् । तद्वैशिष्ट्यनिवेशफलस्य प्रतिबन्धकत्वान्तरकल्पनयोपपादनात् । दूरस्थे धर्मिणि अयं स्थाणुरित्यादि निश्चयनन्तरं करादिरूपविशेषदर्शने सति नायं स्थाणुरित्यादिप्रत्यक्षोत्पत्त्या विशेषादर्शनविशिष्टस्यैव विपरीतनिश्चयस्य प्रतिबन्धकता वाच्या, तथा च परामर्शसत्त्वे विपरीतनिश्चयेनानुमित्यप्रतिबन्धात्तदसत्त्वे च कारणाभावादेवानुमित्यनुत्पत्त्याबाधस्य न हेत्वाभासतेतिशङ्का । नास्येति (नवेत्यादिना विशेषदर्शनेन तन्नाशानन्तरमेवेति)

[दी] परैरपि क्वचित्प्रत्यक्षविशेष एव विपरीतनिश्चयविशेषस्यैव तथात्वोपगमाच्च । न हि शाब्दादिबोधेपि विशेषदर्शनविशिष्टे ... स विरोधी, गौरवात्, मानाभावाच्च । न वा चाक्षुषा प्र ...

[ग] विपरीतनिश्चयानन्तरोत्पन्नविशेषदर्शनाधीनविपरीतनिश्चयनाशे सत्येवे- त्यर्थ । क्षणमात्रस्य तिसूक्ष्मकालतया तद्विलम्बेन फलोपगमेऽनुभवविरोध विरहात् । दूरत्व दिदोषजन्यभ्रमस्य विशेषदर्शनोत्पत्तिकाले तदनन्तर चास- म्भवेन दोषविशेषाधीनत्वमुक्तत्वाभावभ्रमस्थलत्वात्र विशेषदर्शनाधीनभ्रमत्व महत्कल्पनापेक्षा, तत्कल्पनेपि क्षणविलम्बस्यावश्यकतया क्षणविलम्बे सति पूर्वभ्रमनाशस्यावश्यकतया तत एवोपपत्तेरिति नात्र भ्रमत्वग्रह स्वीकृत । ये पूर्वक्षणे भ्रमसत्वेपि विशेषदर्शनबलात्प्रत्यक्षमङ्गीकुर्वन्ति तेषामपि परोक्ष- ज्ञानप्रतिबन्धकता या विशेषादर्शनवैशिष्ट्यनिवेशो नानुमत, विपरीतनिश्चय सत्वे सति विशेषदर्शने शाब्दादिबोधानुपगमादिति बाध यानुमितिविरोधित्व ध्रुवमित्याह (परैरिति) "प्रत्यक्षविशेष एव" तदिन्द्रियजन्यप्रत्यक्ष एव । 'विपरीतनिश्चयविशेषस्यैव' तदिन्द्रियजन्यदोषविशेषाजन्यविपरीतनिश्चय- स्यैव । "तथात्वोपगम त्" विशेषादर्शनविशिष्टत्वेन प्रतिबन्धकत्वोपगमात् । विशेषणपादप्रयोजनमाह (न वेति) दोषविशेषजन्यविपरीतज्ञानसत्त्वे तद- निवर्तकत्वेन विशेषदर्शनस्याकिञ्चित्करतया तत्सत्त्वेपि समानेन्द्रियजन्यप्रत्य- क्षानुपपत्त्या विशेषादर्शनमपुरस्कृत्यैव तस्य विरोधित्वमिति दोषाविशेषाजन्यत्व विशेषपदार्थेन्तर्भावितम् । उक्तस्थलेप्यय स्थाणुरिति भ्रमोत्पत्तिकाले अय न स्थाणुरिति प्रत्यक्षवारणाय विशेषादर्शनविशिष्टदोषप्रतिबन्धकताया आवश्य कत्वेन तद्विशिष्टविपरीतज्ञानप्रतिबन्धकत्वमफलमिति बोध्यम् ।

ननु यत्र विपरीतनिश्चयानन्तर तन्निवर्तक विशेषदर्शन, तत्र विशेष दर्शनस्योत्पन्नविपरीतज्ञाननाशकतया विपरीतज्ञानान्तरोत्पादावरोधितया च प्रत्यक्षनिश्चयोपयोगित्वेपि यत्र शङ्खत्वादिदर्शनकाले दोषविशेषजन्य

[दी] भ्रमात्वेन निश्चीयमानतया तथात्वापत्तिरिति । न च सति विशेषदर्शने विपरीतनिश्चयोऽकिञ्चित्करः, तत्सत्त्वेऽपि विशेषदर्शनेन प्रत्यक्षोत्पादादिति वाच्यम्; विशेषदर्शनेन तन्नाशानन्तरमेव प्रत्यक्षोदयात् ।

---

[ग] ज्ञानपरामर्शादीनाम् । (तथात्वापत्तिरिति) यथायोगं कार्यप्रतिबन्धकत्वस्य कार्यजनकत्वस्य चापत्तिरित्यर्थः । तुल्ययुक्त्या प्रामाण्यनिश्चयेऽपि निश्चितप्रामाण्यकत्वस्य तत्रापि च तथात्वापेक्षायामनवच्छिन्नप्रामाण्यग्रहधारायाः कार्यग्रहविरोधित्वादापेक्षिततया स एव न स्यात्, प्रतिबन्धकविशेषणपरम्पराया अनवस्थितिश्चेति तत्र तत्र प्रामाण्यनिश्चयो यदि नापेक्ष्यते तदा तुल्यं प्रकृतेऽपीति भावः । अगृहीताप्रामाण्यकत्वेन प्रतिबन्धकतामतेऽपि तद्घटकाप्रामाण्यग्रहे अनिश्चिताप्रामाण्यकत्वविशेषणं, तत्र चागृहीताप्रामाण्यकत्वविशेषणमित्येवं क्रमेण अनवस्थितिरिति तु नाशङ्कनीयम्; प्रतिबन्धकीभूतनिश्चयविशेषणागृहीताप्रामाण्यकत्वघटकाप्रामाण्यग्रहे निश्चिताप्रामाण्यकत्वानिवेशात्, तत्राप्रामाण्यनिश्चयदशायां कार्यवारणाय तदप्रामाण्यनिश्चयविशिष्टविपरीतनिश्चयादीनां अगृहीताप्रामाण्यकत्वानवच्छिन्नानां प्रतिबन्धकत्वान्तरस्यैव कल्पनीयत्वात् । तादृशाप्रामाण्यनिश्चये चानिश्चिताप्रामाण्यकत्वाविशेषितप्रामाण्याभावस्य विशेषणत्वोपगमात् । तद्वैशिष्ट्यनिवेशफलस्य प्रतिबन्धकत्वान्तरकल्पनयोपपादनात् । दूरस्थे धर्मिणि अयं स्थाणुरित्यादिनिश्चयानन्तरं च दिरूपविशेषदर्शने सति नायं स्थाणुरित्यादिप्रत्यक्षोत्पत्त्या विशेषादर्शनविघ्न्येव विपरीतनिश्चयस्य प्रतिबन्धकता वाच्या, तथा च परामर्शसत्त्वे विपरीतनिश्चयेनानुमित्यप्रतिबन्धात्तदसत्त्वे च कारणाभावादेवानुमित्यनुत्पत्त्याबाधहेत्वाभासतेति शङ्का निरस्यति (नचेत्यादिना) (विशेषदर्शनेन तन्नाशानन्तरं

[दि] इति ग्रहस्य परस्परोपरागानवगाहिनो व्यभिचाराविषयकत्वात् । एकत्र व्यभिचाराव्यभिचारयोरेकनिश्चयागोचरत्वात् । पूर्णे च कारणे साक्षादनुमितिविरोधिनो व्यभिचारज्ञानादेरकिञ्चित्करत्वात् । उक्तञ्च ''साध्यादे

---

[ग] तयोरित्यादि । (इति ग्रहस्येति) इत्याकारकस्यैव तत्रत्यबाधग्रहस्येत्यर्थः । (परस्परोपरागानवगाहिन इति) हेतौ साध्याभावविशिष्टधर्मिवृत्तित्वस्य साध्याभावविशिष्टे धर्मिणि हेतुमत्त्वस्य चानवगाहिन इत्यर्थः । एतच्च व्यभिचाराविषयकत्वे हेतुगर्भं विशेषणम् । विशिष्टव्यभिचारभाने च खण्डशस्तद्घटकभानावश्यकत्वेऽर्थानवगाहिनो ज्ञानस्येव विशिष्टविषयकविशकलितसमूहालम्बनस्याप्यनुमित्यविरोधितया बाध एवानुमितिविरोधीति भावः । ननु तत्र विशिष्टव्यभिचारज्ञाने किं बाधकमित्यत आह (एकत्रेति) (एकनिश्चयागोचरत्वादिति) तदुभयभाने निश्चयत्वस्यैव निर्वाहात्, तदनिर्वाहे च व्याप्तिनिश्चयाभावेनैवानुमित्यनुत्पादादिति भावः ।

ननु विशिष्टस्य साध्याभाववद्वृत्तित्वादेरिव तद्धर्मिणि साध्याभाववत्त्वादिना सहित तद्धर्मिणो हेतुमत्त्वादिकमपि व्यभिचारः, विशकलिततदुभयज्ञानादपि अनुमितिप्रतिबन्धस्यानुभाविकत्वादित्युक्तस्थलेऽपि व्यभिचारनिबन्धन एवानुमित्यनुत्पाद इत्याशङ्क्याह (पूर्णे चेति) तृतीयलिङ्गपरामर्शसमवधाने सति परामर्शविघटकतयैवानुमितिविरोधिनो व्यभिचारस्वरूपसिद्ध्यादिग्रहस्यानुमित्यनुत्पादानिर्वाहकत्वादित्यर्थः । तथा च तृतीयलिङ्गपरामर्शसमवधाने सति पक्षे साध्याभावग्रहे तादृशबाधादेवानुमितिप्रतिबन्ध इति तस्य हेत्वाभासतेति भावः । तादृशबाधग्रहकाले व्यभिचारज्ञानं न नियतं, तज्ज्ञानस्य व्यभिचारज्ञानासहकृततयापि बाधस्य सार्थक्यं निष्प्रत्यूहमेवेत्याह (उक्तञ्चेति)

[दी] पक्षावृत्तित्वादिकमपि ग्राध , न च तद्ग्रहेऽपि व्यभिचरवुद्धेरावश्य की, यत्तु अनिश्चितप्रामाण्यस्य ज्ञानस्यार्थनिश्चयरूपत्वे प्रामाण्यनिश्चयवैयर्थ्यम्, अतिप्रसङ्गश्च, तथा च पक्षे साध्याभावज्ञानस्य निश्चयत्वसम्पत्तयेपेक्षणीयम्त त्प्रमात्वनिश्चय एव प्रतिबन्धक , प्राथमिकत्वादुपजीव्यत्वाच्च, न तु चरमभावि तदधीन व्यभिचारज्ञान, इति, तत्तुच्छ, तस्य प्रतिबन्धकत्वेनाक्लृप्तत्वात् , अगृहीताप्रामाण्यकत्वेनैव निश्चयस्य स्वकार्यकारित्वात्, अन्यथानवस्थानात्, अप्रामाण्यशङ्कानिवर्तकत्वेन च क्वचित्प्रामाण्यग्रहोपयोगात्, संशयसाधारण स्य व्यभिचारज्ञानस्य विरोधित्वाच्चे'' ति ।

---

[ग] ''न च ' नहि ' ' तद्ग्रहेऽपि'' तादृशबाधादिग्रहकालेऽपि । (व्यभिचार बुद्धेरावश्यकीति) धर्मिणि साध्याभाववत्त्वस्यैव साध्ये धर्मवृत्तित्वस्य व्यभि चारघटकत्वादिति भाव । साध्याभाववुद्धे प्रमात्वस्य व्यभिचारज्ञानोपजा व्यज्ञानविषयतया हेत्वाभासत्वमिति यन्मूलोक्तं तद्दूषयितुमुपन्यस्यति (यत्त्विति) ' निश्चयरूपत्वे'' तत्कार्यकारित्वे । ''अतिप्रसङ्ग ' गृहीताप्रामाण्य कज्ञानस्य तथात्वप्रसङ्ग । (तत्प्रमात्वनिश्चय एवेति) विरोध्यविषयकोऽपि ति शेष । (प्रतिबन्धक इति) अनुमितावित्यादि । प्राथमिकत्वं कादाचित्कमित्यत (उपजीव्यत्वादिति) ''नत्वि त्यादिना व्यभिचारज्ञानस्य साक्षादनुमितिप्रतिब न्धकत्वमेव व्यवच्छिन्नम् व्याप्तिज्ञानविरोधितायामविवादात्, अन्यथा व्यभि चारस्य हेत्वाभासतानुपपत्ते । ''तस्य ' पक्षे साध्याभावबुद्धिप्रमात्वनिश्चयस्य। (अक्लृप्तत्वादिति) व्यभिचारज्ञानस्य च पक्षातिरिक्ते साध्याभावहेतुमत्तावगा हिज्ञानात् यत्रानुमित्यनुत्पादस्तत्र प्रतिबन्धकता क्लृप्तेति भाव । उपजीव्य त्वमपि दूषयति (अगृहीतेति) ''अन्यथा'' निश्चितप्रामाण्यकत्वेन तथात्वे । प्रामाण्यग्रहवैयर्थ्यमुद्धरति (अप्रामाण्यशङ्केति) (क्वचिदिति) यत्र कोटिउपस्थि त्यादिरूपकारणसमवधानं तत्रेत्यर्थ । ''क्वचि'' दित्यनेनेदृशोपयोगिताया मनवस्था नास्तीति सूचितम् । व्यभिचारज्ञानस्य साध्याभावांशे निश्चयत्वापे क्षाया प्रमात्वनिश्चयापेक्षा, सैव नास्तीत्यतोऽपि न प्रमात्वनिश्चयोपजीव्यते त्याह (संशयेति)

[दी] यत्तु उपनीतकाञ्चनमयत्वविशिष्टवह्न्यनुमितिविरोधी व्यधिकरणकाञ्चनमयत्वावच्छिन्नप्रतियोगिताको वह्न्यभावो बाध, न च विशिष्टसाध्याप्रसिद्ध्या कथं तद्विशिष्टानुमिति? विशेष्ये विशेषणमिति न्यायेन तत्सम्भवात्,

---

[ग] मूलोक्तानि कतिपयदूषणान्युद्धृत्य सौन्दडमतं परिष्कृत्योपन्यस्यति (यत्त्विति) (बाध इति) असङ्कीर्णे इत्यादि । "किञ्च" त्यादिमूलोक्तदूषणमुद्धरति (न चेत्यादिना) "विशिष्टसाध्याप्रसिद्ध्या" अनुमितेः पूर्वं काञ्चनमयस्वरूपविशेषणतावच्छेदकविशिष्टवह्निरूपविशेषणाज्ञानेन । "कथं तद्विशिष्टानुमिति" कथं तादृशविशिष्टसाध्यविशेषणकानुमितेः प्रसक्तिः । तथा च कारणबाधादेव तत्र विशिष्टानुमित्यनुत्पादसम्भवात् बाधोऽकिञ्चित्कर इति भाव । (विशेष्ये विशेषणमितीति)

अयं भाव.—विशिष्टविशेषणकज्ञानं द्विविधं तदुपलक्षितप्रतियोगिकवैशिष्ट्यावगाहि तद्विशिष्टप्रतियोगिकवैशिष्ट्यावगाहि च, आद्ये विशेषणज्ञानसंसर्गाग्रहयोरेवापेक्षा, न तु विशेषणतावच्छेदकप्रकारकधियोऽपि, अत एव अवान्तरवाक्यार्थज्ञानं विनैव महावाक्यार्थज्ञानमङ्गीकुर्वन्तीति । न चैवमपि पूर्वं विशिष्टाप्रसिद्धेरेव विशिष्टप्रतियोगिज्ञानाभावात् बाधग्रहो न सम्भवतीति स्वरूपसतो बाधस्याकिञ्चित्करतेति वाच्यम्, प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य विशिष्टविशेषणज्ञानविधयैव विशिष्टप्रतियोगिविशेषिताभावबुद्धौ हेतुत्वात्, काञ्चनमयत्वेन वह्निर्नास्तीत्याकारिकायां स्वातन्त्र्येण प्रतियोगितावच्छेदकतया काञ्चनमयत्वाद्यवगाहिन्यामभावबुद्धौ तदपेक्षाविरहात् । प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वभानमिति नियमस्य व्यधिकरणधर्मावच्छिन्नाभाववादिनोऽननुमतत्वात् । पूर्वं कथञ्चिद्विशिष्टसाध्यज्ञानेनापि बाधग्रहो विशिष्टवैशिष्ट्यविषयकानुमितिकारणान्तरसमवधाने सम्भवतीत्यपि बोध्यम् ।

[दी] शुद्धसाध्यव्याप्तिग्रह देव चोपनयसहकारेणा प्रसिद्धविशिष्टसाध्यानुमिति सम्भवात् तदभावो बाधे स्तु, तेन रूपेण व्याप्तेरनुपादानाच्च तथा व्यभिचारो नदोषाय,

---

[ग] ननु विशिष्टज्ञानापेक्षया कथञ्चिद्विशिष्टज्ञानसम्पत्त्या वा नभ ग्रहसम्भवे व्यभिचारोऽपि गृहीत इति तत एवानुमितिर्निभविष्यतीति किं बाधे नेति दूषणमुद्धर्तुं तत्र काञ्चनमयत्वावच्छिन्नवह्न्यभावरूपबाधतादृशाभावव द्वृत्तित्वरूपव्यभिचारग्रहयोः काञ्चनमयत्वविशिष्टवह्न्यनुमितिविरोधित्वाविरोधित्वे दर्शयति (शुद्धसाध्येति) (अप्रसिद्धविशिष्टसाध्यानुमितीति) पूर्वाज्ञात काञ्चनमयत्व दिविशेषितवह्न्यादेरनुमितिसम्भवादित्यर्थः। "तदभावः" काञ्चन मयत्वाद्यवच्छिन्नवह्न्यभावः। 'बाधोस्तु" विशिष्टसाध्ये साधनीये बाधरूपप्रकृतहेतुदोषोस्तु। विशिष्टसाध्यव्याप्तिग्रहविषयतयेव उपनयादिसहकृत शुद्धसाध्यव्याप्तिग्रहविषयतयापि प्रकृतहेतोर्विशिष्टसाध्यभानप्रयोजकतया बाधदशाया तस्य तदनुत्पादकताया बाधप्रयुक्तत्वात्, तादृशबाधग्रहस्य शुद्धसाध्यानुमित्यविरोधित्वेपि शुद्धसाध्ये साधनीये तस्य दोषत्वानुपगमे क्षतिविरहादिति भावः। "तेन रूपेण' काञ्चनमयत्वादिसहितवह्नित्वादिना। "तथा व्यभिचार" काञ्चनमयत्वाद्यवच्छिन्नवह्न्यभाववद्वृत्तित्वम्। (न दोषायेति) हेत्वधिकरणपक्षातिरिक्तमात्रे काञ्चनमयत्वाद्यवच्छिन्नवह्न्याद्यभावग्रहेपि पक्षे काञ्चनमयत्वाद्यवच्छिन्नवह्न्यनुमित्यनुपगमेनानुमितौ साक्षाद्व्यभिचार-ज्ञानस्य विरोधित्वेपि काञ्चनमयत्वादिसहितवह्नित्वाद्यवच्छिन्नविधेयताकानुमितावेव तथा व्यभिचारधियो विरोधित्वात् काञ्चनमयत्वाद्यवच्छिन्ननिरूपित-व्याप्तिज्ञानजन्यानुमितौ काञ्चनमयत्वाद्यंशे विधेयतावच्छेदकताख्यविलक्षण-विषयताविरहेणोक्तव्यभिचारधियोऽविरोधित्वादिति भाव।

अथ व्यधिकरणकाञ्चनमयत्वाद्यवच्छिन्नवह्न्यभावप्रतीतौ, काञ्चनमयत्वमेव प्रतियोगितावच्छेदकतया भासते, मम नाधिकरणवह्नित्वादिकन्तु

[दी] उपनीतसकलभाने चाप्रामाण्य प्रत्यक्षे पि तुल्यम्,

[ग] प्रतियोगित्युपलक्षणतयैव, तस्य प्रतियोगिता.वच्छेदकत्वात् , एवञ्च काञ्चनमयवह्निमानित्यनुमितौ काञ्चनमयत्ववाह्नित्वयो प्रतियोगितावच्छेदकस्य पर्याप्त्यवगाहिभावगहस्यैव प्रतिबन्धकतया नोक्त ज्ञानस्य विरोधितेति कथ स हेत्वाभास ' न च उभयधर्मप्रकारेण साध्यानुमितौ एकधर्मांशेऽवच्छेदकत्वमवगाह्यान्यत्र च प्रतियोगिताया सामानाधिकरण्य वगाहित्वेनैव प्रतिबन्धकतेति वाच्यम् तथा सति काञ्चनमयत्वेन महानसीयवह्निर्नास्ती ति धियोपि काञ्चनमयवह्निमानित्यनुमितिविरोधितापत्ते, अधिक त्विति न्यायेन इतरसामानाधिकरण्याभावस्य प्रतिबन्धकतायामतन्त्रत्वात्, न च एकांशे स्वरूपसम्बन्धरूपस्यापरांशेनतिरिक्तवृत्तित्वरूपस्यावच्छेदकत्वस्यावगाहन प्रतिबन्धकत्वे तन्त्रम्, ईदृशप्रतिबन्धकत्वस्य क्व प्यक्लृप्तत्वात्, तावतापि काञ्चनमयत्वेन वह्निघटोभयसामान्य नास्तीति ज्ञानस्य काञ्चनमयवह्निमानित्यनुमितिविरोधिताया दुर्वारत्वाच्च, नैव प्रतियोगिविशेषणतया भासमानधर्मस्यापि समानाधिकरणतया व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगिये गितावच्छेदकत्वोपगमने काञ्चनमयवह्निर्नास्तीति भ्रम इव काञ्चनमयत्वेन वह्निर्नास्तीत्यादिवुद्धावपि काञ्चनमयत्वच वह्नित्वयो प्रतियोगितावच्छेदकतापर्याप्तिभानाङ्गीकारात्, न च मिलितत्वाऽभासमानयो प्रतियोगिविशेषणतया स्व तन्त्र्येण च भासमानयोरुभयोर्मिलितयो प्रतियोगितावच्छेदकतापर्याप्तिमान काञ्चनमयो नास्ति वह्निर्नास्तीत्यादाविव दुर्घटमिति वाच्यम्, एकस्या प्रतियोगिविषयताया मवच्छेदकतया भासमानयोरेव यदुभयधर्मावच्छिन्नप्रतियोगित्वविषयतयोरभावनिष्ठैकविषयतानिरूपितत्व तयोर्मिलितयो प्रतियोगितावच्छेदकत पर्याप्तिभानोपगमात् , इत्यल विस्तरेण ।

'' अन्यथा पूर्वापस्थितसकलभान'' इत्यादिमूलोक्तमनुमितेरुपनीतभानरूपदूषणमुद्धरति (उपनीतसकलभाने चेति) (प्रत्यक्षेपि तुल्यमिति) तथा च प्रत्यक्षमात्रस्यैवाप्रमितिमात्रस्यापि किञ्चिदंशेऽप्रमात्वमिष्टमेवेति भाव ।

[दी] अनुद्देश्यांशे चानुमितेरप्रामाण्य न वादि विजयप्रयोजकमिति ।

तत्र, प्रत्यक्षे हि विना सन्निकर्षमभानादुपनीतभानस्य प्रत्यभिज्ञादा व नुभाविकत्वादुपनयोपि सन्निकर्षं कल्प्यते । अनुमितौ च फलासिद्धया न सामग्र्यन्तरकल्पना ।

[ग] तावता च वादिनो न निग्रह इत्याह (अनुद्देश्यांश इति) वादिनो यद्विषयसिद्धिरनुद्देश्या तदंश इत्यर्थः (अनुमितेरप्रामाण्यमिति) वादिसम्वादितानुमिते भ्रमत्वमित्यर्थः । (न वादिविजयप्रयोजकमिति) न वादिकर्मकपराजयवादिविजयप्रयोजकमित्यर्थः । यत्सिद्धिर्वादिन उद्देश्या तत्साधनपरिपन्थिहेत्वाभासस्यैव निग्रहस्थानत्वादुद्देश्यांशे अनुमितेरप्रामाण्य एव तादृशदोषसम्भवदिति भाव । एतत्समाधानमपि मूलोक्तशङ्काक्रमेणाभिहितमित्यवधेयम् । मूलस्थाया अनुमितावुपनीतभानस्याप्रामाणिकत्वोक्ते विवरणेन च बाधकान्तरप्रदर्शनेन च मतमेतन्निराकरोति (तत्रेत्यादिना) प्रत्यक्षेपि ज्ञानं यदि विशेषणज्ञानमुद्रया स्वविषयभासक तदानुमितावपि तस्य तथात्वं दुर्वारमेव, विशिष्टानुभवत्वावच्छिन्नं प्रत्येव विशेषणज्ञानादेर्हेतुतयानुभवसामान्य एव तस्य विषयभासकतासम्भवात्, अतस्तत्र ज्ञानस्य सन्निकर्षविधया तथात्व वाच्यमिति (प्रत्यक्षे हीति) अनुमित्यादौ यदि नोपनीतस्य भानं तदा प्रत्यक्षेपि मास्तु, अविशेषादिति किं ज्ञानस्य सन्निकर्षत्वेनेति प्रतिबन्दिमुद्धरत्याह (उपनीतभानस्येति) उपनीततत्तद्विषयस्येत्यर्थः । 'प्रत्यभिज्ञादा' वित्यादिना घटो नास्ति इह सुरभि चन्दनमित्यादिप्रत्यक्षपरिग्रहः । (उपनयोपि) ज्ञानमपीत्यर्थः । "सन्निकर्षं" स्वविषये मनस सन्निकर्षं । "कल्प्यत" इत्यत्र विषयभासकत्वेनेत्यादि । तद्बलाच्च नोपनीतस्यानुमिता भानम्, प्रत्यक्षत्वस्य सन्निकर्षजन्यतावच्छेदकत्वादिति भाव । ननु अस्तु पक्षज्ञानस्य प्रत्यक्ष कार्यतावच्छेदकम्, तथापि विशेषणज्ञानबाधाऽभावबलादनुमितावुपनीत भासतामित्यत आह (अनुमिताविति) (न सामग्र्यन्तरकल्पनेति)

[दी] न खलु वह्निव्याप्यधूमपरामर्शादुपनीतरासभमनुमितिरानुभाविकी क्वापि । अन्यथा पर्वते वह्निसन्देहवतो निश्चितवह्न्यव्यभिचारकेण

---

[ग] अयं भावः-विशेष्यभासकसामग्रीनिरपेक्षं केवलबाधाद्यभावसहितं विशेषणज्ञानविधया हेतुभूतं ज्ञानं न स्वविषयभासकं, अतिप्रसङ्गात् ; विशेष्यभासकसामग्री च प्रत्यक्षानुमित्योरननुगतेति प्रत्यक्षसामग्रीसमवहितमेव तत्तथा, नत्वनुमितिसामग्रीसमवहितम्, तादृशस्य तथात्वे फलपलाभावात् । काञ्चनमयत्वव्याप्यवान् वह्निः काञ्चनमयवह्निव्याप्यवान् पर्वत इत्यादिपरामर्शघटित वह्न्यादिभासकानुमितिसामग्रीतोऽपि वह्न्यादौ काञ्चनमयत्वादिविशिष्टबुद्धिरुत्पद्यत इति विशेष्यभासकानुमितिसामग्रीसमवहितमपि काञ्चनमयत्वादिरूपविशेषणज्ञानादिकं स्वविषयभासकमिति चेत् ; भवतु तादृशमपि तद्विशेषणज्ञानादिकं तथा, वह्निव्याप्यवान् पर्वत इत्यादि काञ्चनमयत्वादिविषयकत्वावच्छिन्नाजनकपरामर्शादिसहितकाञ्चनमयत्वादिज्ञानस्य विषयभासकत्वं तावतापि न सिद्ध्यति । सर्वसाधारणवह्न्यादिभासकसामग्र्या च तद्भासकानुमितिसामग्रीत्वं चैकं दुर्वचम् । पुनश्चत्वेऽपि तेन रूपेण न हेतुतेति तेन रूपेण न सहकारितासम्भव इति ।

फलासिद्धिमेव विवृणोति (न खल्विति) ननु काञ्चनमयवह्निमान् पर्वत इत्यादिभाने तत्तद्विषयोपस्थितिबाधविशेषाभावादिघटिता या सामग्री विशिष्टविषयकत्वप्रयोजिका सा काञ्चनमयत्वाद्युपस्थितिबाधविशेषाभावादिसहिता वह्न्यादिव्याप्यवत्परामर्शसमवधानकालेऽप्यक्षतैव, तादृशज्ञाने मानसत्वप्रयोजिकायाने समग्रानुमितिसामग्रीरूपप्रतिबन्धकाभावनिवेशात् ; तद्विशिष्टविषयत्वावगाहिताप्रयोजकशरीरे प्रयोजकविरहेण तदनन्तभावात् ; न च सामग्रीप्रविशिष्टविशेष्यज्ञानस्य मानसानुमित्यैकरूपेण हेतुतेति कथं तादृशसामग्र्या अनुगतरूपेणोभयत्र विशिष्टविषयकत्वे प्रयोजकत्वे

[दी] अभिधेयत्वादिना पर्वतादौ प्रमेयत्वादिकमनुमितिमतोऽपि वह्न्यर्थिनो वह्नि मत्त्वनिश्चयान्निष्कम्पप्रवृत्त्यापत्तेरिति ।

---

[ग] वाच्यम्, प्रत्यक्षनिष्ठोपनायकज्ञानजन्यताया अपि अनुमितिसाधारणालौकि कज्ञानत्वस्यैवावच्छेदकत्वोपगमेन प्रत्यक्षानुमित्योरेकरूपेण विशिष्टज्ञानहेतुत्वा नपायात्; न च प्रत्यक्षत्वापेक्षया लघोर्ज्ञानत्वस्य उपनायकज्ञानजन्यतावच्छे दकत्वं निर्युक्तिकम्, तुल्यशरीरत्वेऽपि विनिगमनाविरहेण उभ ... ... प्रत्यूहत्वात्; इत्यादावनुमितावुपनीतभाने बाधकमाह (अभिधेयत्वे

[दी] (पक्षधर्मताबलेनेत्यादि) ननु विशेषतो व्याप्तग्रहात्र तथा सिद्धिसम्भव ना सामान्यत सिद्धौ न विशेषतो बाधो विरोधी, भिन्नप्रकारत्वात्, न च समानविषयकत्वमेव विरोधित्वे तन्त्र, पृथिव्यादिरूपबाधग्रहेपि

---

[ग] इदन्तु बोध्यम्–अनुमितावुपनीतभानस्वीकारे वह्न्याद्यनुमितिश्च समय वादिनेव तत्कृतिग्रह नसीयवह्नित्वादिनापि पर्वतादौ वह्न्याद्यनुमिते शु द्धवह्निव्याप्यवत्तापरामर्शत सम्भवे तद्विरोधितया समान प्रकरणमहानसीय वह्नि वच्छिन्नाभावरूपबाधस्यापि असङ्कीर्णदोषता दुर्वारेति वह्निव्याप्यधूम वान् पर्वत इत्यादिपरामर्शान्महानसीयवह्न्यादिर्बाधादेव न पर्वतादौ भासत इति न बाधस्य पृथग्दोषत्वमिति ।

"पक्षधर्मताबलेने" त्यादिमूलोपदर्शितसिद्धान्ते उपाध्यायोक्तदूषण माशङ्कते (नन्विति) "विशेषत" महानसीयवह्नित्वादिना । "तथा सिद्धि" तादृशविशेषधर्मप्रकारिका सिद्धि । "सामान्यत" व्यापकतावच्छेदकवह्नि त्वादिना । "विशेषतो बाध" महानसीयवह्नित्वावच्छिन्नाभावग्रह । "भिन्नप्रकारकत्वात्" अभावप्रतियोगितावच्छेदकतया ग्राह्यतावच्छेदकरूप प्रकारानवगाहित्वात् । समानप्रकारकत्वस्यैव प्रतिबन्धकताया तन्त्रत्वादिति भाव । (समानविषयकत्वमेवेति) अभावप्रतियोगितावच्छेदकतया ग्राह्यवृत्ति धर्मावगाहित्वमेवेत्यर्थ । न त्वभावप्रतियोगितया ग्राह्यविषयकत्वमेवेत्यर्थ. ; वह्निर्नास्तीति सामान्याभावबुद्धौ महानसीयवह्न्यादे प्रतियोगितयाऽभाने महानसीयवह्न्यादिज्ञानविरोधित्वानुपपत्ते । न च सामान्यप्रत्यासत्तितः सामा न्याभावबुद्धौ सकलप्रतियोगिभान नियतम्, सामान्यज्ञानसत्त्वेपि तत्प्रकारक लौकिकप्रत्यक्षसामग्र्यसत्त्वे सकलसामान्याश्रयभानासम्भवात्; अनुपस्थित व्यक्तीनां विशेषणज्ञानरूपकारणविरहेणाभावांशे प्रतियोगितया प्रकारत्वायो गाच्च । एवकारेण समानप्रकारकत्व तन्त्रतान्यवच्छेद ।

[ख] वायुरूपवान् वेति संशयात् रूपवानित्यनुमितेश्च । न चारूपमेव रूप-त्वेन शङ्कितमारोपितं वा तद्विषयः, तादृशशङ्काविरहेऽपि तयोरानुभाविकत्वात्। दोषवशाच्छ्वेतं द्रव्यमिति भ्रमेऽपि इह पीतः शङ्ख इति प्रत्ययात् ;

---

[ग] अनुमितेश्चेत्यस्य समानविषयकत्वेन विरोधिताऽच्यते, तत्राह रूपवानित्यनुमितश्चेति) "अरूपं" रूपभिन्नम्। (शङ्कितमारोपितं चेति) वाकारोऽनास्थायाम्। रूपत्वांशे निर्धर्मितावच्छेदककतदवच्छिन्नविशेष्यताकबुद्धौ रूपत्वप्रकारकज्ञानत्वेन तन्निश्चयतत्संशययोर्द्वयोरेव हेतुत्वात्। "तयोः" संशयानुमित्योः। (अनुभाविकत्वादिति) तथा च तत्रानुमित्यारूपविषयकत्वस्य स्वीकरणीयतया समानविषयकत्वेन विरोधितायां तदनुपपत्तिरिति भावः। ननु पूर्वं रूपत्वेन रूपज्ञानविरहेऽपि तादृशसंशयादौ विशेष्येविशेषणमिति रीत्या धर्मिविशेषणतया भासमाने रूपे रूपत्वभानं सम्भवतीत्याशंक्य बाधकान्तरमाह (दोषवशादिति) (श्वेतं द्रव्यमिति) द्रव्यपदं श्वेतपदस्य धर्मिपरतालाभाय। (इह पीत इति) यद्यपि ग्राह्यशङ्खवृत्तिशुक्लत्वावच्छिन्नाभावग्रहे इह शङ्ख इति पीतत्वाविषयकज्ञानस्यानुपपत्तिः, तथापि भ्रमस्य साक्षात्कारित्वज्ञानविरोधिताप्रयोजकपित्तादिदोषजन्यतया श्वैत्यप्रकारेण शङ्ख-ग्रहस्य तत्रानुत्पत्त्या शङ्खग्रहे श्वैत्याविषयकत्वस्य लाभाय (पीत इति) (प्रत्ययादिति) साक्षात्कारिप्रत्ययादित्यर्थः। अत्र शङ्खत्वेनासन्निकृष्टस्य उप-नीतशङ्खस्य न भानोपगमसम्भवः, शङ्खं साक्षात्करोमीत्यनुभवात् ; नापि लौकिकसन्निकर्षाश्रयस्य कस्य चिदशङ्खस्य, तदानीं तत्राशङ्खत्वसाक्षात्कारसामग्रीसत्त्वेन शङ्खत्वग्रहासम्भवात् ; अतस्तत्र शङ्खत्वेन शङ्खस्यैव भानमङ्गीकार्यम्, तच्च शुक्लत्वावच्छिन्नाभावग्रहदशायां भवन्मते न सम्भवतीति भावः। ननु तत्र पित्तादिना प्रतिबन्धात् शङ्खादौ श्वैत्याद्यग्रहेणैव इह श्वेतः शङ्ख इति साक्षात्कारविरहोपपत्तेः, दोषनाशे च सति तादृशभ्रमत्वेऽपि

[दी] घटपटौ न स्त दण्डी चैत्रो नास्तीति ग्रहेऽपि घटोऽस्ति चैत्रोऽस्तीत्य वगमात् ।

---

[ग] तादृशसाक्षात्कारोपगमसम्भवाद्दोषविशेषजन्यभ्रमस्य लौकिकप्रत्यक्षप्रति बन्धकत्व सविवादमित्याशक्य बाधकान्तरमाह (घटेति) भाक्षपर्यासधर्माव- च्छिन्नाभावग्रहस्य प्रतिबन्धकत्वोपगमे द्वा न स्त इत्यत्र परम्परासम्बन्धेन द्वित्वाभावस्य विषयत्वोपगतृमते च घटपटौ न स्त इत्यादिग्रहे घटोऽस्तीत्या दिज्ञानस्य नानुपपत्तिरित्यतो विशिष्टाभावग्रहदशायां विशेष्यप्रतीविपर्ययतानुप पत्तिप्रदर्शनम् ।

यद्यपि विशेष्यवति विशिष्टाभावप्रत्ययस्य विशेषणाभावावगाहित्वंवा दिना प्र चा मते नेयमनुपपत्ति, वस्तुतस्तु समानप्रकारकत्वेन विरोधितामतेऽपि दण्डविशिष्टचैत्रो न स्तीति ग्रहदशायां दण्डोपलक्षितचैत्रवत्ताप्रत्ययस्य समान प्रकारकस्य नुपपत्तिरित्युपलक्षणीभवत्तद्धर्मप्रकारकप्रतियोगिमत्ताग्रहे तद्धर्मे विशि ष्टाभावविषयितायोगिता विलक्षणतद्धर्मावच्छिन्नप्रतियोगित विषयक भ वग्रहस्य तद्विशिष्टप्रतियोगित्ताग्रहे च विलक्षणप्रतियोगिमत्तावगाहिविशिष्टाभावग्रहस्य प्रतिबन्धकता वाच्या, तथा च समानविषयकत्वेन विरोधितापक्षेऽपि तद्वत्ताग्र हसामान्यविरोधिताया विशिष्टाभावीयप्रतियोगिताविलक्षणतद्वृत्तिधर्मावच्छिन्न प्रतियोगितावगाहित्व तन्त्रमित्युक्तौ नोक्तदोषावसर, तथापि तन्मते तद्वत्ता ज्ञान प्रति वास्तवतद्वृत्तिधर्मावच्छिन्नप्रतियोगितावगाहित्वेन प्रतिबन्धकत्वेन पीतो नास्तीति ग्रहे पीत शङ्खोऽस्तीत्यानुमानिकप्रतीत्यापत्ति, पीतत्वस्य वस्तुत शङ्खावृत्तित्वात्, शुक्लत्वस्य शङ्खावृत्तित्वभ्रमदशायां शुक्लो नास्तीति भ्रमे तादृशप्रतीत्यनुपपत्तिश्चेति तद्वृत्तित्वस्थाने तद्वृत्तितया गृह्यमाणत्व विशेषण

[दी] सलिङ्गपरामर्शाद्बाधितविशेषभानप्रसङ्गश्च विशेषबाधावतारानवतारयो' समान , समानसमाधानश्च ।

---

[ग] देय, तथा च कालान्तरीयपुरुषान्तरीभ्रमज्ञानव्य वर्तन य तत्तत्कालपुरुष-निवेशेन महागौरव दूषण बोध्यम् ।

न च समानप्रकारकत्वेन विरोधितामते घटत्वपटत्वादिरूपप्रकारान्त र्भावेण विरोधितानामाधिक्यमिति गौरवमिति वाच्यम्, समानविषयकत्वेन विरोधितामतेप्युक्तक्रमेण ज्ञानव्यक्तिभेदेन प्रतिबन्धकताभेदाद तिगौरवात् । वायौ रूपविशेषाभावकूटग्रहदशाया वायौ रूपा यत्किमपि नास्तीति भ्रमसत्त्वे वायू रूपवाश्चेति सशयादेरनुपपत्तिरपि तन्मते द्रष्टव्या ।

ननु समानप्रकारकत्वेन विरोधित्वे पर्वते महानसीयवह्निर्न स्तीत्यादि विशेषबाधावतारदशाया सलिङ्गपरामर्शाद्वह्नित्वादिसामा यधर्ममद रेण पर्वत दौ महानसीयवह्न्यादिविषयकभ्रमानुमितिप्रसङ्ग समानविषय त्वेन विरोधित्वे च तद्भासकेतरबाधादिसत्त्वेपि विशेषबाधादेव न तत्र तद्भानप्रसङ्ग इत्यत आह (सदिति) (विशेषबाधावतारानवतारयो सम न इति) समानप्रकारक त्वेन विरोधितामते यथा विशेषबाधावतारदशाया तत्प्रसङ्ग तथा समानविष यकत्वेन विरोधितामते विशेषभासकतरबाधासत्त्वेपि विशेषब ध नवतारद शाया तत्प्रसङ्गोस्तीत्यर्थ । (समानसम धान इति) यथा समानविषयकत्वेन विरोधितामते बाधितेतरबाधासत्त्वे विशेषबाधानवतारे तादृशेतरबाधा दर्क्ष पक्षेपविरहादेव तादृशभ्रमानुमितिविरह इति समाधान तथा समानप्रकारक त्वेन विरोधितामतेपि तदेव समाधानमित्यर्थ ।

समानप्रक रकत्वेन विरोधितामतेपीतरबाधादित विशेषरूपेणैव पक्षे बाधितविशेषभानानभ्युपगम्य बाध सङ्करस्य व्यवस्थाप्यतया तन्मते उत्कर्षत्वा नाविभ्रमसङ्कवारणसम्भव , तादृशबाधा दिरूप दोषस्य सागा यरूपेण

[दी] अत्र वदन्ति–व्यापकतावच्छेदकमपि रूपं लाघवज्ञानादिसहकारिवशादनुमितौ प्रकारीभवति, यथा जीवनमरणान्यतरप्रतियोगी प्राणित्वादित्यत्र जीवनप्रतियोगित्वम्,

---

[ग] बाधितविषयकानुमितावपि हेतुतया तादृशदोषविरहस्य तादृशप्रमानुमिति विरहाप्रयोजकत्वात्, तथापि तन्मते सामान्यरूपेण पक्षे बाधितविशेषानुमित्यप्रसिद्ध्या तत्सामग्र्यकल्पनेन न तत्प्रसङ्ग। प्रत्यक्षे प्रसिद्धस्य सामान्यरूपेण बाधितविशेषमानस्यानुमितावभावस्तु तादृशप्रत्यक्षसामग्रीविरहप्रयोज्य एवेति। यद्यपि साध्यतावच्छेदकप्रकारेणाप्रसिद्धमिव प्रसिद्धमपि साध्य धूम गोत्वादिकं साधयेदिति मूले लेखनात्साध्यतावच्छेदकवह्नित्वादिप्रकारकब घितविशेषसिद्धिविरोधितया बाधस्य हेत्वाभासत्वं मूलकाराभिमत, तथापि समानविषयकत्वेन विरोधिताया विचारासहत्वात् तामुपेक्ष्य सहकारिविशेषवशाद्व्यापकतावच्छेदकप्रकारेणापि साध्यस्यानुमितौ भानमभ्युपगम्य समाधत्ते (अत्र वदन्तीत्यादि) "लाघवज्ञानादी" त्यादिना एकविशेषबाधपरिहार। (प्रकारीभवतीति) साध्यांश इत्यादि।

अत्रापसिद्धान्तशङ्कामपनिनीषुर्मणिकारसमतिमादर्शयितु अत्र तस्यापि व्यापकतावच्छेदकप्रकारकत्वमनुमतं तथाविधदृष्टान्तद्वयमाह (यथेत्यादिना) (इत्यत्रेति) व्यतिरेकिग्रन्थे मणिकारोपदर्शितवह्निसत्त्वसाधकलिङ्गविशेषणासिद्धिपरिहारफलकानुमान इति शेष। "जीवनप्रतियोगित्व" मिति भावप्रधानम्। व्यापकतावच्छेदकमपि साध्यांशे लाघवज्ञानबलादन्यतरप्रतियोगित्वांशे प्रकारीभवतीत्यनुषङ्गादिनान्वय। ननु तत्रान्यतरप्रतियोगित्वात्वरूपव्यापकतावच्छेदकप्रकारेणैव लाघवज्ञानबलाद्विशेषस्य जीवनप्रतियोगित्वस्य सिद्धि, न तु तद्रूपेण, न चैवं लाघवज्ञानस्यानुपयोग –परामर्शस्यैव सामान्यरूपेणाबाधितविशेषानुमापकत्वसम्भवादिति वाच्यम्, अपरविशेषभाननिवृत्तौ लाघवज्ञानस्योपयोगात्, यदि च बाधितविशेषभासफलाघवज्ञानरूप

[ई] अन्यथा जीवित्वे इति गृहासत्त्वस्य हेतोरसिद्धया बहिस्सत्त्वानुमानायोगात् । एव क्षित्यादिकर्तुरेकत्वमपि । अन्यथा एकोऽनेको वा क्षित्यादिकर्तेति सन्देहप्रसङ्गात् ।

---

[ग] दोषविरहादेवाबाधितविशेषधर्मिकत्वावच्छिन्नदशायां तादृशविशेषभानासम्भवात् अबाधितविषयकत्वज्ञानस्योपयोगिता न घटते, तदा भवतु तदनुपयोग्येव, बाधितधर्मिकत्वावच्छिन्नज्ञानमेव तद्भाननियामकतया अबाधितभानप्रतिबन्धकतया चोपयुज्यतामित्यत आह (अन्यथेति) (बहिस्सत्त्वानुमानायोग इति) यत्र ज्योतिश्शास्त्रावधारितनियमात्ममरणविशेषजन्यत्वादिरूपलिङ्गाद्देवदत्तस्य शतवर्षजीविता प्रथममवधारिता, अनन्तर च भूयो भूयो गृह एव दृष्ट्वा शतवर्षजीवी गृह एवेति नियमोऽवधारितः, ततः कदाचिद्योग्यानुपलब्ध्या गृहे तदभावं निश्चित्य प्रतिसन्धत्ते देवदत्तस्य शतवर्षजीवित्वे तदुपपादकं बहिः सत्त्वमावश्यकमिति गृह एवेति नियमो न सम्भवति तादृशनियमसत्त्वे च मरणस्यावश्यकतया तादृशजीवित्वनिश्चायकनियमो न सम्भवतीति तदानीमयमन्योऽप्रमाणं किं वा एतादृशनियमग्रह एवेति देवदत्तो जीवति मृतो वेति, तत्र मरणापेक्षया जीवित्वे लाघवग्रहे सति जीवित्वोपपादकं नहि तत्त्वसिद्धेरनुमानतो निर्वाहादित्यर्थः । तथा सति सहायकरणकार्यापत्तेर्निराकरणं नोपपद्यत इति भावः । ननु तत्र सामान्यरूपेण जीवित्वसिद्ध्यैव विशेषसंशयनिवृत्तौ मनसो हेतुसिद्धिरित्यपि मणिकाराभिप्रायः सम्भवतीति समानविषयकत्वप्रयुक्तविरोधित्वाभिप्रायकतयापि तन्मूलव्याख्यासम्भवात् अनुमितेर्व्यापकतानवच्छेदकप्रकारकत्वस्य मणिकारानुमतत्वं न लभ्यत इत्यनुशयेन दृष्टान्तान्तरमनुसरति (एवमिति) (क्षित्यादिकर्तुरेकत्वमपीति) ईश्वरानुमान इत्यादि । प्रकारीभवतीत्यनुषज्यते न्वय । तत्रैकत्वस्याप्रकारत्वे च ईश्वर एकस्तदनेकस्तयोर्भिन्नस्तत्संशय इति पूर्वपक्षं कृत्वा लाघवस्य प्रमाणसहकारितया सिद्धान्तं प्रणयता मणिकृतेऽनुमता युक्तिमाह (अन्यथेति) क्षितिकर्तुरेक

[दी] अनुमितेश्च तादृप्येण लघवर्थविषयकत्वे तथाविधानुव्यवसाय-विरहात् सति लाघवप्रतिसन्धाने लघ्वर्थपरिच्छेदकत्वमनुमानस्येत्यपि न सिद्ध्यत्, इत्यश्च विशेषतो जायमानानुमितिं विरुणद्धि बाध इति बाध

---

[ग] त्वश्च न क्षितिकर्तृनिष्ठभेदाप्रतियोगित्वम्, अन्यत्र तदप्रसिद्धेः, क्षितिकर्तरि च लाघवज्ञान विना तदप्रसिद्धे अनुपस्थिते तत्र लाघवज्ञानासम्भवात् । न च द्व्यणुकादिकर्तरि अङ्कुरादिकर्तृभेद एव क्षित्यादिकर्तृरेकत्वम्, अङ्कुरादिकर्तृभेदश्चाङ्कुरादिकर्तरि सिद्धे तत्रैव प्रसिद्धयतस्तूपस्थिते तत्रैन लाघवज्ञानसम्भवेन तत्सहकृतद्व्यणुकादिपक्षकसकर्तृकत्वानुमानं तु द्व्यणुकत्वादौ अङ्कुरादिकर्तृभेदरूपकर्त्रैकत्व सिद्धयतीति वाच्यम्, कार्यत्वादिलिङ्गेनाङ्कुरादौ विशेष्यसकर्तृकत्वस्य प्रथमत सिद्धावपि प्रत्येकमङ्कुरादावुभयकर्तृकत्वसंशयसम्भवेन तत्कर्तृनिष्ठभेदाप्रतियोगित्वसिद्धयसम्भवात् । किन्तु आत्मानात्मोभयावृत्तिदु खवदवृत्तिद्वित्वशून्यत्व तत् । तादृशाद्वत्व आत्मेतरद्रव्यद्वये प्रसिद्ध तच्छून्यत्व च गुणादावपि ।

ननु लाघवत्वसामान्यरूपेणैव लघ्वर्थविषयिणी अनुमितिरस्तु न तु व्यापकतानवच्छेदकधर्मेण, लघ्वर्थविपरीतसंशयश्च लघ्वर्थैरिव निवर्तयिष्यतीत्याशङ्क्य युक्त्यन्तरमाह (अनुमितेश्चेति) (तादृप्येणेति) लाघववीविषयताव्यच्छेदकमहानसीयवह्नित्वादिरूपेणेत्यर्थः । 'तथाविधानुव्यवसायविरहात्' महानसीयं वह्निमनुमिनोमीत्यनुव्यवसायासम्भवात् । (न सिद्ध्येदिति) तथा च वह्निमनुमिनोमीत्यादिप्रतीते वह्निविषयकत्वादिमात्रसाधकतया विशेषतो महानसीयवह्न्यादौ पक्षकत्वसाधकप्रतीतिविरहादिति भाव । भवतु लाघवज्ञानादिवशात् व्यापकतानवच्छेदकप्रकारेण साध्यानुमिति, तावता किमायातमित्याकाङ्क्षायामाह (इत्थं चेति) महानसीयवह्न्यादौ लाघवमित्यादिलाघवज्ञानसहकृताद् वह्निव्याप्यवान् पर्वत इति परामर्शात् महानसीयवह्न्यादिभा

[दी] पृथक् । सल्लिङ्गपरामर्शात् कथं भ्रान्तानुमितिर्जायताम् ? न जायेत वा कथं यथार्थेति चेत्; बाधानवतारे बाधितार्थे लाघवज्ञानाद्दोषादेव,

---

[ग] महद्दशायामिव तदमहद्दशायामपि पर्वतो महानसीयवह्निमानित्यनुमितेः स्याद्यदि नासौ प्रतिबन्धको भवेदिति बाधः पृथग्दोष इत्यर्थः । शङ्कते (सल्लिङ्गपरामर्शादिति) (कथं भ्रान्तानुमितिरिति) दोषविरहादिति भावः । (न जायेत वा कथं यथार्थेति) अनुमितिरित्यनुषज्यते । गुणरूपकारणसत्त्वादिति भावः । उभयत्रैकमुत्तरमाह (बाधानवतार इति) असल्लिङ्गपरामर्शाभावेऽपि बाधानवतारसहकृताद्वास्तवबाधितार्थविषयकलाघवज्ञानरूपात् दोषाद्धेतोरेव भ्रान्तानुमितिबाधग्रहरूपोत्तेजकाभावविशिष्टतादृशदोषरूपप्रतिबन्धकसत्त्वात् प्रमानुमित्यनुत्पादश्चोपपद्यत इत्यर्थः ।

यद्यपि भ्रमरूपपरामर्शविरहेऽपि आलोकाभाववद्विशेष्यकव्याप्यवत्ताज्ञानरूपासल्लिङ्गकपरामर्शः तत्र क्षत एव तथापि न तन्मात्रात्पर्वतादौ महानसीयवह्न्यादिभानमिति लाघवज्ञानस्य दोषताया आवश्यकत्वे तस्य तथात्वमप्रामाणिकम्, न च लाघवज्ञानं विनापि महानसीयवह्निव्याप्यवान् पर्वत इत्यादिपरामर्शाद्भ्रमानुमित्युत्पत्त्या तादृशपरामर्शस्यापि दोषत्वमावश्यकमिति वाच्यम्, सर्वसाधारणपरामर्शत्वस्यैकस्याभावात्, पर्वतविशेष्यकमहानसीयवह्न्यनुमितौ तद्विशेष्यकमहानसीयवह्नित्वावच्छिन्ननिरूपितव्याप्तिविशिष्टहेतुमत्तापरामर्शस्य हेतुत्वेऽपि महानसीयवह्न्यभाववद्विशेष्यकशुद्धवह्निव्याप्यवत्ताज्ञानत्वेन हेतुत्वाकल्पनात् । परामर्शलाघवज्ञानयोर्जन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशाल्लाघवज्ञानजन्यानुमितौ महानसीयवह्निव्याप्यवत्तापरामर्शस्य तज्जन्यानुमितौ च लाघवज्ञानस्य न व्यभिचारः ।

केचित्तु लाघवज्ञानोपनीतमहानसीयत्वादौ न विधेयतावच्छेदकतारूपविलक्षणविषयता स्वीक्रियते, अपि तु प्रकारतामात्रम्, पर्वतो वह्निमानित्यादि

[ग]सिद्धिदशाया तादृशानुमितिर्न जायत एव महानसीयवह्निव्याप्यवत्तापरामर्श जन्य नुमितौ च महानसीयत्वसहित वह्नित्वमेव विधेयत वच्छेदकमिति कार्य वैचित्र्यान्न परस्पर व्यभिचार इत्य हु । तन्न, लाघवज्ञ न दधिकविषयकानु-मिते साध्यतावच्छेदकावच्छिन्नप्रकारकसिद्धिप्रतिबध्यत्वे देवदत्तजीवनमरणा न्यतरप्रतियोगित्वसामान्यनिश्चयदशाया लाघवज्ञानाज्जीवित्वस्य विशेषतोसि द्धया वहि सत्त्वानुमानानुपपत्ते । एव च तादृशसिद्ध्यभावाघटितलाघवज्ञान सहकृतस मान्यधर्मावच्छिन्नव्याप्यवत्ताघटितसामग्र्या भिन्नविषयकप्रत्यक्षादौ प्रतिबन्धकता धिक्य प्रामाणिकत्वाददे षायेति सक्षेप ।

वह्निव्याप्यधूमवान् पर्वत इति परामर्शात् महानसीयवह्नौ लाघवमिति लाघवज्ञानदश या महानसीयवह्निभिन्नवह्न्यभाववानित्यादीतरबाधग्रहदशाया च पर्वतादौ बाधितमहानसीयवह्न्याद्यनुमितिर्व धानवतारदशाया जायते, न तु तदवतारदशायामिति विशेषबाधोसङ्कीर्णतया हेत्वाभास सामान्यधर्माव च्छिन्नसाध्यकानुमितौ विशेषव्यभिचारस्यादोषत्वादिति मणिकृत ।

अत्रोप ध्याया लाघवज्ञाना दिसत्त्वेपि व्यापकतावच्छेदकतया गृहीतेनैव रूपेणानुमितिरिति महानसीयवह्नित्वादिना न महानसीयवह्न्यनुमिर्जायते, अपि तु शुद्धवह्नित्वादिनैव । तत्र महानसीयवह्न्यभावधीर्न विरोधिनी, द्वि-त्वावच्छिन्नाभावनिश्चयदशायामपि प्रत्येक सशय देरनुभवसिद्धतया ग्राह्यताव च्छेदकावच्छिन्नाभाव नश्चयस्यैव विशिष्टधी विरोधत्व त् । अतो न विशेष बाधसम्भव । न च बाधबुद्धे प्रतिबन्धकताया समानप्रकारकत्वस्य तत्रत्वे लाघवज्ञानादिजन्यमहानसीयवह्न्याद्यनुमितिर्यदि शुद्धवह्नित्वा दिनैव तमवगा हते तदा तदनन्तर महानसीयवह्निमान्न वेति सशय स्यादिति लब्धधर्मभासक माथे लाघवज्ञ नमनुपयुक्त स्यादि ति समानविषयकत्वेन बाधबुद्धेर्विरोधित्व मनुमितौ विशेषरूपेण लब्धर्थविषयकत्व वावश्यकमित्युभयथैव विशेषबाधो

[ग] हेत्वाभासे भवेदिति वाच्यम्, लाघवज्ञानस्यैव तदसत्त्वदशायविरोधित्वात् लाघवज्ञानजन्यानुमितिनाशानन्तरमिव लाघवज्ञाननाशानन्तरमपि क्षण सश योपगमे क्षतिविरहादिति ।

अत्र मन्या – लाघवज्ञाननाशे लाघवज्ञानजन्यानुमितिसत्त्वेपि यद्युक्त संशय स्वीक्रियते तदा लाघवज्ञानस्य लघ्वर्थभासकत्वमेवोच्छिद्येत, तज्जन्यानुमितौ लघ्वर्थविषयताया व्यर्थत्वात् । न च तस्या फलान्तरासत्त्वेपि लघ्वर्थविषयकत्वेनानुमितेरनुव्यवसायाल्लघ्वर्थविषयकत्व दुरपह्नवमिति वाच्यम्, यतो वह्निमानित्यनुमितेरनुव्यवसायस्य वह्निमनुमिनोमीत्याकारकतैव न तु महानसीयवह्निमनुमिनोमीत्याकारकतेति तस्य तदवगाहिताया एवासिद्धे । एव महानसीयवह्नौ लाघवज्ञानसत्त्वे तदसत्त्वदशायामिव सल्लिङ्गकपरामर्शात्प्रमानुमिति स्यादिति लाघवज्ञानस्य प्रमानुमितिप्रतिबन्धकत्वमुभयमत एवावश्यकम् । तत्र चोपाध्यायमते वह्नौ महानसीयवह्नौ च लाघवमिति लाघवज्ञानदशाया पर्वते पर्वतीयवह्न्यनुमितिनिर्वाहाय बाधितार्थविषयकलाघवज्ञानप्रतिबन्धकताबानबाधितार्थकलाघवज्ञानस्योत्तेजकता वाच्या । तथा च पर्वतचत्वरादिविशेष्यकपर्वतीयचत्वरीयवह्न्यादिविषयकानुमितित्वेन प्रतिबध्यत्व पर्वतीयचत्वरीयवह्न्यादिधर्मिकलाघवज्ञानविरहविशिष्टमहानसीयवह्न्यादिधर्मिकलाघवज्ञानत्वेन प्रतिबन्धकत्वमुपेयमित्येकैकस्य लाघवज्ञानस्य पक्षभेदेनानन्त्यम् । नव्यमते च वह्नित्वपर्याप्तविधेयतावच्छेदकताकानुमितित्व बाधितवह्न्यादिधर्मिकलाघवज्ञानस्य प्रतिबध्यतावच्छेदकम्, पर्वतीयवह्नौ लाघवमिति लाघवज्ञानात् पर्वतादौ पर्वतीयवह्निरेवानुमित्युत्पादात्, तस्याश्च शुद्धवह्नित्वावच्छिन्नविषयकतया लाघवज्ञानस्योत्तेजकत्वमन्तरेणैव निर्वाह इति न पक्षभेदेन प्रतिबन्धकताभेद । वह्नित्वादौ विधेयतावच्छेदकतापर्याप्तिनिवेशश्चोपाध्यायमतेप्यावश्यक, अन्यथा पर्वतीयवह्नित्वाप्यवानम, पर्वत इत्यादि

[घ] तथा सामान्यतो दृष्टादितरप्रसिद्धाशेषविशेषबाधसहकृतात् शिष्यमाण प्रसिद्धप्रकारिकानुमितिर्जायते । यथा भाजनसाध्यकर्षीनत्वादिना सन्ध्याभोजना बाध रात्रिभोजनप्रकारिका । एवं द्रव्यवृत्तित्वसाध्यकगुणत्वादिच्छाया दिगत द्रव्यवृत्तित्वबाधे, प्रसिद्धमनोवृत्तित्वानुमितिर्जायमाना मनोवृत्तित्वाभावप्रमया

---

[ग] तथा च महानसीयवह्न्यादिमत्वाप्रदविरोधित्वेनैक भाव प्रातिस्विकरूपे णाभावकूटो वा निविशतामित्यपदेतत् । प्रतिबध्यतावच्छेदकं च न यथार्थ वह्न्यनुमितित्वम्, यथार्थत्वस्य तद्वति तत्प्रकारकत्वस्य तत्तद्वह्निव्यक्तिभेदेन भिन्न त्वात् । नापि वह्न्यन्तरानुमितित्वम् वह्निद्वयलाघवज्ञानसत्त्वे परस्परप्रतिब न्धेनानुमित्युच्छेदप्रसङ्गात्, एकलाघवज्ञाने अपरलाघवज्ञानानुत्तेजकत्वे गौ रवात् । किन्तु शुद्धवह्नित्वावच्छिन्नविधेयताकानुमितित्वमेव । अतो महान सीयत्वादिभानसिद्धिरिति दिक् ।

इतरबाधस्य सामान्यतो दृष्टस्यापि व्यापकतावच्छेदकप्रकारकानुमिति जनकतायामुत्तेजकत्वात् तज्जन्यविशेषप्रकारकानुमितिविरोधितयापि बाध स्य हेत्वाभासत्वं व्यवस्थापयति (तथेति) 'सामान्यतो दृष्टात् सामान्यधर्मा वच्छिन्नव्याप्यत्वाज्ञानात् । (तदितरप्रसिद्धाशेषविशेषबाधसहकृतादिति) यद्विशेषरूपावच्छिन्नसामान्यं न प्रसिद्धं तदेकतररूपभिन्न परसकलरूपावच्छि न्नस्य बाधसहकृतादित्यर्थः । (शिष्यमाणप्रसिद्धप्रकारिकेति) यद्विशेषरूपावच्छि न्नस्य बाधो न गृहीतः तद्धर्मावच्छिन्नप्रसिद्धप्रकारकेत्यर्थः । तदानीमप्रतीत स्य मनोवृत्तित्वस्य बाधमध्ये दिगन्तद्रव्यवृत्तित्वस्य बाधग्रहेऽपि विशेषतो मनो वृत्तित्वानुमित्युत्पत्त्या सहकारिशरीरे प्रसिद्धिनिवेशः । सन्ध्याभोजनप्रसिद्ध दशायां दिवाभोजनमात्रबाधग्रहात् विशेषतो रात्रिभोजनस्य पर्यवसानेन न्यथा सिद्धया शक्यानवेशः । अज्ञातसुरभिगन्धस्य सुरभिभिन्नगन्धबाधग्र- हात् भिन्नत्वेन सुरभिगन्धत्वावच्छिन्नप्रकारकानुमित्यनुत्पत्त्या प्रसिद्धेः सह कारितासाधाय शिष्यमाणे प्रसिद्धिविशेषणमुपात्तम् ।

[ग] अत्रेदं बोध्यम्— यादृशसामग्रीबलात् आत्मवृत्तित्वाप्रसिद्धिस्थले तद्बाधग्रहेऽपि मनोवृत्तित्वानुमितिस्तादृशी सामग्र्यगृहीतबाधस्यात्मवृत्तित्वस्य प्रसिद्धिदशायामपि, तत्कथं तदानीं न मनोवृत्तित्वानुमितिः ? न हि मनोवृत्तित्वानुमितावात्मवृत्तित्वप्रसिद्धेः प्रतिबन्धकत्वं सम्भवति, येन तत्सत्त्वात्सामग्रीविरहः, तथा सति तद्बाधग्रहेऽपि मनोवृत्तित्वानुमित्यनुपपत्तेः । न च तद्विशेषणकबाधग्रहाभावविशिष्टतद्विशेषप्रसिद्धेः प्रतिबन्धकत्वान्नायं दोष इति वाच्यम्, तथा सति तद्बाधग्रहहेतुताया निर्युक्तिकत्वापत्तेः, उत्तेजकतयैव तदुपयोगोपपत्तेः । यत्र विशेषान्तरमात्रस्यैव न प्रसिद्धिः तत्रोपस्थितविशेषप्रकारकानुमितेर्वारणाय विशेषान्तरप्रसिद्धेरेव हेतुतायाः कल्पनौचित्यात् । तस्मात् तद्धर्मविशेषितसामान्यधर्मावच्छिन्नविषयकानुमितौ तद्विपरीतधर्मसहितसामान्यधर्मावच्छिन्नाभाववग्रह एव हेतुः । न तु विशेषधर्मान्तरसहितसामान्यधर्मावच्छिन्नाभाववग्रहः । तद्विपरीतधर्मश्च तदत्यन्ताभावः, तद्वदन्यत्वञ्च । अत्यन्तान्योन्याभावयोश्च विपरीतौ प्रतियोगिप्रतियोगितावच्छेदकौ । अभावग्रहे प्रतियोगितावच्छेदकसामान्यघटितविशेषधर्मप्रकारेण भासमाने प्रतियोगिनि निरुक्तयद्धर्मविपरीतधर्मस्य यादृशं विशेषणत्वं तादृशमेव चानुमितौ तद्धर्मस्य सामान्यधर्मावच्छिन्नविशेषणत्वं । महानसीयवह्निभिन्नवह्न्यभाववानित्यत्र बाधग्रहे महानसीयत्वविपरीतस्य महानसीयान्यत्वस्य प्रतियोगिनि साक्षाद्विशेषणतेति साक्षान्महानसीयत्वविशेषितस्य वह्नित्वावच्छिन्नस्य महानसीयवह्निमानित्यनुमितौ भानम् । विशेष्यभावान्यविशिष्टाभाववद्वृत्तित्वादिबाधग्रहे विशेष्याभावान्यत्वादेः वृत्त्यादिविशेषणककोटिप्रविष्टे अभावादौ विशेषणत्वमिति तदधीनविशिष्टव्यभिचारानुमितावपि तादृशाभावादौ विशेष्याभावत्वादिसामान्यधर्मस्य विशेषणतया भानाद्विशेषव्यभिचारसिद्धिः । तथा च

[ग] रात्रिभिन्नकालमें अं, इच्छा न मनोभिन्नद्रव्याश्रितेति सामान्याभावाव गाहिन धमहदशायामेव पीनत्वगुणत्वादिना रात्रिभोजनमनोरूपद्रव्यवृत्तित्वा दि प्रकारिकानुमितिः । दिवा न भुङ्क्ते न पृथिवीवृत्तिः न जलवृत्तिरित्या दि विशेषाभावकूटग्रहश्च सामान्याभावग्राहकतयैवोपयुज्यत इति ।

यद्यप्येकविशेषाभावग्रहस्थले तद्विशिष्टसामान्यसाधकहेतुत एव विशे षान्तरप्रकारिकासिद्धिरपि सम्भवति, तथापि यत्र तद्विशिष्टसामान्यसाधकहेतौ विशेषान्तरव्याप्तिग्रहोऽप्रमाणिकस्तत्र तत्सिद्ध्यर्थमीदृशस्य ग्रन्थान्तरकथनम् । न च तत्रापि फलानुरोधात् तादृशग्रहकल्पनमेवोचितमिति वाच्यम्, यत्र पूर्वं हेत्वाद्यनुपस्थित्या व्याप्तिग्रहो बाधितस्तत्र तत्कल्पनस्यासम्भवात् । न च वि शेषणविशेष्ययोरुपस्थितौ मानसविशिष्टोपस्थितिसम्भवात् कालविलम्बेन व्या प्त्यादिग्रहः अनुमितिश्च शक्यते कल्पयितुम्, यत्र च व्याप्त्याद्यग्रहः प्रमा णान्तरसिद्धस्तत्र फलमेवापलपनीयम्, इति वाच्यम्, यत्र धूमत्वादिकमनुप- स्थितम् अथ च शब्दादिना वह्निव्याप्यमहानसीयान्यवह्न्यभावे भयत्वादिना म हानसीयवह्न्यादिव्याप्तिविशिष्टस्य पक्षधर्मतागृहः तत्र सर्वमतसिद्धमहानसीय वह्न्याद्यनुमित्यर्थं तादृशव्याप्त्यादिज्ञानस्य तादृशानुमितिसामग्रीत्वमकल्पयित्वा महानसीयान्यवह्न्यभावादिग्रहसहकृतवह्न्यादिव्याप्यवत्ताज्ञानस्यैव तादृशानु मितिसामग्रीत्वकल्पनादेवोपपत्तेः फलापलापादेरन्याय्यत्वादिति ।

यथा विशेषान्तरबाधग्रहसहकृता सामान्यज्ञानसामग्री व्यापकतावच्छेदकविशेषधर्मप्रकारेण व्यापकानुमितिं जनयति तथा सामान्यज्ञानसहकृता विशेषान्तरबाधग्रहसामग्र्यपि विशेषधर्मप्रकारेण व्यापकमप्यनुमापयति, स्थल द्वयेऽपि विशेषधर्मप्रकारकसंशयानुरोधादानुभाविकत्वात् । तथाविधसामग्र्याः तादृशानुमितिजनकत्वापगमे वह्निमहानसीयान्यवह्न्यभावव्याप्योभयलिङ्गकमहा

[ग] प्रसिद्धाभाववति पक्षे व्यभिचारान्न तत्सिद्धिरिति चेत्! तर्हि स्व सिद्धाभाववति सपक्षे व्यभिचारात् तमपि न साधयेत्। तद्ज्ञानात्साधनेऽनुमितिरप्रमा स्यात्। अथ पक्षवृत्तेरन्य एव धूमादिः सपक्षे, तर्हि गोत्वपृथिवीत्वद्रव्यत्वादेरप्रसिद्धसाध्यानुमानं न स्यात, साम्नादिमत्येकव्यभिचारात्। यदि च साध्यतावच्छेदकसास्नात्वादिसामान्यावच्छिन्नप्रतियोगिताकाभाववति न गोत्वादिकमिति न व्यभिचारः, तर्हि धूमेऽप्येवं व्यभिचाराभावात् साध्यतावच्छेदकेन प्रकारेणाप्रसिद्धमिव प्रसिद्धमपि साध्यं धूमगोत्वादिकं साधयेत् यदि बाधो न दोष इति भयम्। साध्याभाववन्मात्रसहचारो न व्यभिचारः, साध्यप्रागभावध्वंसवद्वृत्तित्वेन व्यभिचारितया पृथिवीत्वादिना गन्धादेर्द्रव्यत्वादिना गुणस्यानुमानभङ्गप्रसङ्गात्। किन्तु साध्यात्यन्ताभाववद्गामित्वम्।

---

[दी] बाध्यत इति विशेषबाधो दोषः। 'किन्तु साध्ये' त्यादिकमापाततः। वस्तुतस्तु प्रतियोग्यसमानाधिकरणसम्बन्धविशेषावच्छिन्नप्रतियोगिताकसाध्या

---

[ग] नसीयवह्नित्वावच्छिन्नसाध्यकपरामर्शस्य महानसीयवह्नित्वावच्छिन्नविधेयताकानुमितौ हेतुत्वान्तरकल्पनाच्चेति मतमवलम्ब्य मणिकृता पुरोवर्तिविशेष्यकवह्नित्वप्रकारकज्ञानत्वावच्छिन्ने वह्नित्वाभाववति वह्नित्वप्रकारकत्वाभावानुमानात् वह्नित्ववति वह्नित्वप्रकारकत्वरूपप्रामाण्यसिद्धिरङ्गीकृतेत्यवधेयम्।

व्यभिचारशरीरेऽत्यन्ताभावत्वेनाभावनिवेशेऽप्यावश्यकप्रतियोगिवैयधिकरण्यादिविशेषणेन ध्वंसप्रागभाववारणात् "किन्तु साध्यात्यन्ताभाववद्गामित्व" मिति मूलमसङ्गतमित्यभिसन्धायाह (किन्तु साध्येत्यादिकमापातत इति) प्रति

[म] एवं च स्वप्रागभावप्रध्वंसावच्छिन्नसदाभये तत्प्रतियोगिसाधने पक्षे व्यभिचारो नेति बाधो दूषणम् ।

---

[दं] भवद्भावमित्र व्यभिचार. । स्वप्रागभावत्वादिक स्पष्टत्वेनोक्तम् । तत्र तदानीं तदत्यन्ताभाव याति व्युत्पादितत्वात् । अत एव स्वेकालावच्छि । घटे पृथिवीत्वादिन रूपादिसाधने बाधे निरासार्थं पदमादधाति ।

---

[ग]योग्यसामानाधिकरण्यविशेषणेनैव साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणेनापि प्रतियोगिवादिन्यावृत्तिः सम्भवति. ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वमतेपि तयोर्धर्मविशेषसम्बन्धविशेषावच्छिन्नप्रतियोगितावत्त्वे मानाभावादिति दर्शयितुं साध्याभावे प्रतियोगिसामानाधिकरण्यमिव सम्बन्धविशेषावच्छिन्नधर्मविशेषावच्छिन्नप्रतियोगिताकत्वमपि विशेषणं दर्शितम् । स्वध्वंसप्रागभावावच्छिन्नस्य स्वाश्रयत्य च सामयिकस्वात्यन्ताभावावच्छिन्नत्वसत्त्वात् अत्यन्ताभावं परित्यज्य ध्वंसप्रागभावोपादानमयुक्तमित्य शङ्क्याह (स्वप्रागभा वेत्यादिकमिति) (स्पष्टत्वेनेति) तयो. प्रतियोग्यधिकरणवृत्तितायाः सर्वमतसिद्धत्वादिति भाव. । उत्पत्त्याद्यकाले घटादौ गन्धात्यन्ताभावासत्त्वे तद्गन्धत्वादिना साध्यतायां प्रागभावादिकमादाय बाधसमर्थनेपि रूपत्वगन्धत्वादिना सामान्यधर्मपुरस्कारेण साध्यताया न बाधनिर्वाह इति प्रागभावादिमत्यत्यन्ताभावस्वीकार आवश्यक इत्याह (अत एवेति) "अत एव" ध्वंसप्रागभावसमवेत्यन्ताभावसत्त्वादेव । अन्यथा रूपादिसामान्याभावज्ञानस्यैव स्वत्लो रूपत्वावच्छिन्नज्ञानविरोधितया ध्वंसप्रागभावयो बाधत्वासम्भवेन उक्तस्थले बाधनवकाश तु उपष्टम्भासङ्गतिः । न हि साध्यप्रतियोगिकाभावमात्रज्ञानमेव साक्षात्साध्यतावच्छेदकावच्छिन्नसाध्यधीप्रतिबन्धकम्; तथात्वे घटत्वव्यत्यभावज्ञानस्यापि सध्वंससामान्यधीप्रतिबन्धकतापत्ते. । किन्तु साध्यतावच्छेदकावच्छिन्नाभावज्ञानमेव । न हि ध्वंसप्रागभावयो सामान्यधर्मावच्छिन्नसाध्यकस्थले नभात्व, सामान्यधर्मस्य तत्प्रतियोगितानवच्छेदकत्वादिति ।

·[म] अथावच्छेद्ये सिद्धसाधन, अवच्छेदके हेत्वसिद्धि, विशिष्ट च नान्यदिति चेत् ? तर्हि प्रागभावध्वंसप्रतियोगिनोरेकवृत्तित्वेनैकस मयतापि स्यात्। अथ यत्समयतावच्छेदेन तत्र प्रागभाव प्रध्वंसो वा न तत्समयतावच्छेदेन प्रतियोगीति चेत् ? तर्हि तदवच्छेदेन प्रतियोगिसाधने न सिद्धसाधनम्, किन्तु बाध एव।

---

[ग] मूले (अवच्छेद्ये सिद्धसाधनमिति) विशिष्टघटके विशेष्ये घटादौ साध्यसाधने, सिद्धस्याबाधितस्यैव साधन, प्रमारूपैवानुमितिरिति यावत्। तथा च तत्र बाधो न दोष इति भाव। "अवच्छेदके" ध्वंस प्रागभावादिरूपविशिष्टघटकविशेषणे। "हेत्वसिद्धि" पृथिवीत्वादिरूपहेतोरसिद्धि। ननु विशेष्यविशेषणपक्षके असङ्कीर्णबाधासम्भवेऽपि विशिष्टपक्षके तस्य निष्प्रत्यूहत्वेत्यत आह (विशिष्टश्चेति) (नान्यदिति) विशेषविशेष्याभ्यामिति शेष। गन्धादौ गन्धप्रागभावाद्युपलक्षितघटादिवृत्तित्वसत्त्वेपि न तद्विशिष्टघटादिवृत्तित्वम्। न हि शब्दवृत्तित्वयैवैकसमयावच्छिन्न तद्वृत्तित्वरूप तद्विशिष्टवृत्तित्व निर्वहति तथ सति प्रतियोगिनो ध्वंसप्रागभावादिमद्वृत्तितया एकसमयावच्छिन्नतत्सामानाधिकरण्यमपि स्यादिति विरोध भज्येत। यदि ध्वंसप्रागभावयो प्रतियोगिनश्चैकाधिकरणवृत्तौ एकसमयो नावच्छेदक इत्येकसमयावच्छेदेनैकत्रावर्तमानत्वरूपविरोधस्तदा पक्षतावच्छेदकध्वंसादिसमयावच्छिन्नतद्वृत्तित्वरूपतद्विशिष्टवृत्तित्व प्रतियोगिन्यवगाहमानानुमितिर्बाधितविषयैवेति तादृशानुमितावेव धो तदवच्छेदेन प्रतियोगिनो बाधोऽसङ्कीर्ण तत्र दोष एव, पृथिवीत्वादिहेतौ तद्विशिष्ट वृत्तित्वे सिद्धिविरहादिति समाधत्ते (तर्हीत्यादिना) अधिकरणैक्येनावच्छेद

[म] अन्यथाभावाव्यात्तामाप नोरप्यव्याप्यवृत्तित्वभङ्ग , एकवृत्तित्वस्य अवच्छेदकभेदेन वृत्तिरिहापि । तत्र देशभेदोऽवच्छेदकोऽत्र तु समयभेद इति ।

इति श्रीगङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणावनुमानखण्डे बाधग्रन्थः ।



---

[दी] एवं साध्यवत्तानवच्छेदकदेशावच्छिन्नस्य पक्षत्वेऽपि बाधो बोध्य । अथ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ तदवच्छेदेन हेतुमत्ताज्ञानं प्रयोजकम्, अन्यथा गृहीतभागसिद्धेर्घटत्वादेरपि पृथिवीत्वावच्छेदेन रूपादिसिद्धिप्रसङ्गात्, न च शिखराद्यवच्छेदेन धूमादिमत्त्वमिति चेन्न,—

---

[ग] केचन बाधप्रकारान्तरमाह ( अन्यथेति ) ( अवच्छेदकभेदेन वृत्तिरिति ) एकस्मिन्नधिकरणे विभिन्नावच्छेदेन वृत्तिरित्यर्थः ।

। दीधितौ ( साध्यवत्त्वानवच्छेदकेत्यादि ) वह्निमत्तानवच्छेदकशिखराद्यवच्छेदेन पर्वते धूमादिना वह्न्यादिनाऽनुमितौ त्यर्थ । तत्र पक्षतावच्छेदकशिखराद्यवच्छिन्ने धूमादिमत्त्वस्य तदवच्छेदेन वह्न्याद्यनुमितिजनकज्ञानविषयस्यासत्त्वाद्व्यर्थसिद्धेरिति कुतो बाधस्यासङ्कीर्णता? पक्षतावच्छेदकसामानाधिकरण्यमात्रेण हेतुमत्ताज्ञानस्यावच्छेदकावच्छेदेनानुमितिजनकत्वे भागासिद्धेरदूषणप्रसङ्गादिति शङ्कते ( अथेत्यादिना ) घटत्वादेरिति पञ्चमी । ( पृथिवीत्वावच्छेदेन रूपादिसिद्धिप्रसङ्गादिति ) पृथिवीत्वसामानाधिकरण्यमात्रेण घटादौ घटत्वाद्यभाववद्भागासिद्धिसत्त्वेऽपि तत्सामानाधिकरण्यमात्रेण तद्वत्तासम्भवादिति भाव । भागासिद्धेर्दूषत्वानुरोधेन पक्षतावच्छेदकपृथिवीत्वादौ साध्यस्यानतिरिक्तवृत्तित्वरूपावच्छेदकत्वावगाहनुमितौ तत्र हेतोस्वाद्यंशावच्छेदकत्वावगाहिपरामर्शत्वेन हेतुत्वमास्ते म्, पक्षतावच्छेदकदेश

[दी] अवच्छेदकत्वयोर्वस्तुनोर्भेदात् । शाब्दसामान्यस्याकिञ्चित्करत्वात् । अवच्छिन्नावृत्तेरपि च हेतोस्तत्त्वेन गृहीताज्ज्ञायमानानुमितिं विरुणद्धि बाध प्रमा । सङ्करोपि वस्तुनोर्ज्ञानासङ्करात् । सुखाद्यनवच्छेदकशरीराद्यवच्छिन्ना त्मादौ सुखादिसाध्यकदु खादेर्वर्तमानत्वात् ।

---

[ग] कालयो स्वरूपसम्बन्धरूपावच्छेदकत्वावगाहिन्यामनुमितौ च न तादृशावच्छेदकत्वावगाहिपरामर्शत्वेन, तदवच्छेदेन बाधबुद्ध्यादिरूपप्रतिबन्धकाभावसहितसामानाधिकरण्यमात्रविषयकानुमितिसामग्रीत तादृशानुमितिस्वीकारे क्षतिविरहात् , अवच्छेदकत्वपदार्थयोर्भेदेनैकस्य बाधाभावमात्रात् भ ने प्यन्यस्य भानेधिकापेक्षाया बाधकाभावादिति समाधत्ते ( अवच्छेदकत्वयोरिति ) शिखरावच्छेदेन वह्न्यनुमितौ तदवच्छेदेन हेतुमत्ताज्ञानस्य हेतुत्व मभ्युपेत्यापि तत्र बाधस्य दोषता व्यवस्थापयति ( अवच्छिन्नावृत्तेरिति ) शिखराद्यवच्छेदेन धूमाद्यसत्त्वेपि तदवच्छिन्नत्वेन भ्रमविषयीभूतधूमादितस्तद वच्छेदेन वह्न्यनुमित्युत्पत्तिं बाधप्रमैव विरुणद्धीति बाधो दोष इत्यर्थ बाधबुद्धे प्रमात्वाभिधान तद्विपर्यये दोषासिद्धिं सूचयितुम् । तथापि तत्रापि स्वरूपसदसिद्धिसङ्कर एवेत्याशक्य तत्सङ्करस्याकिञ्चित्करत्वमाह (सङ्करोपीति)

(ज्ञानासङ्करादिति) असिद्ध्यज्ञानदशाया बाधज्ञानस्यैवानुमित्यनुत्पादनप्रयोजकत्वादित्यर्थ । वस्त्वसङ्करस्थलमप्याह ( सुखाद्यनवच्छेदकेति ) सुखाद्यनवच्छेदक यत्तारकीयशरीरादिक शरीरव्यक्तिविशेषादिक वा पक्षतावच्छेदक तदवच्छेदेनात्मादिरूपपक्षे समवायेन सुखादिरूपसाध्यव्याप्यस्य दु खादिरूप हेतोर्विद्यमानत्वादित्यर्थ । तथा च तादृशहेतोरसिद्धिविरहात् पक्षतावच्छेदक शरीरविशेषाद्यवच्छेदेन साध्याभावेऽसिद्ध्याद्यसङ्कीर्णो बाध इति भाव । व्याप्यवृत्ते सर्वावयवावच्छेदेन वृत्तिमत्त्वे मूलावच्छिन्नवृक्षः कपिसंयोगी ए ।

[दी] कपिमंयोगानवच्छेदकमूलाद्यवच्छिन्नकपिसंयोगादिसाध्यकवृक्षविशेषत्वा देर्वर्तमानत्वाच्च । अत्र चैतत्कालावच्छिन्नः पर्वतो वह्निमानिति शब्दादिव एतत्कालावच्छिन्नपर्वतपक्षकधूमादेरप्येतत्कालावच्छेदेन वह्निमत्ताबुद्धिरनुभव सिद्धा नापह्नवमर्हतीत्यभिप्रायः ।

इति दीधितौ बाधविवरणम् ।



[ग] वृक्षत्वादित्यादावपि मूलावच्छिन्नवृत्तिकपिसंयोगाद्यभावादिरूपबाधस्यास ङ्कर इत्याह (कपीति) ननु सर्वत्रानुमितौ साध्ये पक्षतावच्छेदकसामानाधिकर ण्यमेव भासते पक्षताधर्मताबलात्, व्याप्यस्य हेतोः पक्षतावच्छेदकसामाना धिकरण्यरूपपक्षताया व्यापकस्य साध्यस्य पक्षतावच्छेदकसामानाधिकरण्य विनानुपपद्यमानत्वात् । न तु पक्षतावच्छेदकावच्छिन्नत्वमपि साध्यस्य तद वच्छिन्नत्वं विनापि हेतोः पक्षधर्मत्वोपपत्तेः तद्बलविरहात्; बाधाभावबलात्त द्धानेऽप्यदप्यबाधितं साध्यादौ किल भासते ? अथ व्याप्यस्य पक्षतावच्छेदक व्यापकत्वरूपं तदवच्छिन्नत्वं साध्यस्य तादृशतदवच्छिन्नत्वमन्तरेण नोपपद्यत इति तदवगाहिनः परामर्शात्साध्ये पक्षतावच्छेदकव्यापकत्वरूपतदवच्छिन्न त्वावगाहिन्यनुमितिर्युक्तैव, अत एव मगासिद्धेर्दोषत्वमपीति चेत्; भवतु तादृशपरामर्शात्तादृशपक्षतावच्छेदकावच्छेदेनानुमितिः, न च तावता सङ्कीर्ण बाधसौलभ्यम्; हेतोः पक्षतावच्छेदकधर्मव्यापकत्वे बाधासम्भवात्, एवं यत्र यदवच्छेदेन हेतुस्तत्र तदवच्छेदेन साध्यमिति व्याप्तौ गृहीतायां देशकाल रूपपक्षतावच्छेदकावच्छेदेन हेतुमत्ताज्ञानात्तदवच्छेदेन साध्यानुमितिः स्या- देव, तादृशव्याप्तिमतो हेतोः पक्षतावच्छेदकदेशकालावच्छेदेन सत्तायास्तद वच्छेदेन साध्यवत्त्वमन्तरेणानुपपत्तेस्तद्भासकपक्षधर्मताबलसम्भवेऽस्त्येताव- तापि न बाधासङ्करसौलभ्यम्, मध्यावच्छेदकदेशकालावच्छिन्नवृत्ति विशिष्टहेतौ दर्शितायां अवच्छेदकान्तर्भावेन व्याप्तेरसिद्धेरित्युपाध्यायानुयायि नामाशयमनुभवावलम्बेन परिहरति (अत्र चेति) "शब्दादिव" इत्यन्तं दृष्टान्ता भिधानं अनुभवदार्ढ्याय ।

इदन्तु बोध्यम्—यादृशव्याप्तिज्ञानात्पक्षतावच्छेदकसाध्ययोः केवलमेकत्र द्वयमितिरीत्या वैशिष्ट्यविषयिणी प्रमानुमितिः, तत्प्रमात एव चेद्बाधविशेषाभावसहकृतात्पक्षतावच्छेदककालादिविशिष्टानुयोगिकसाध्यवैशिष्ट्यविषयिणी भ्रमानुमितिर्भवेत्तदा गुणादौ द्रव्यवृत्तित्वोपलक्षितसत्तादिवैशिष्ट्यविषयकानुमित्यौपयिकजात्यादिलिङ्गकप्रतियोगितावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगिवैयधिकरण्यघटितव्याप्तिप्रमातः असति बाधावतारे तद्विशिष्टवैशिष्ट्यविषयिणी भ्रमानुमितिरपि तुल्ययुक्त्या युज्यत इति व्याप्तौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यमनर्थकं स्यादिति दिक् ।

इति श्रीमहामहोपाध्यायगदाधरभट्टाचार्यविरचिता
बाधदीधितिटिप्पणी
सम्पूर्णा ।



॥ श्री ॥

न्यायरत्नावली—४

# ॥ बाधग्रन्थः ॥



महामहोपाध्यायश्रीगदाधरभट्टाचार्यविरचितः
श्रीगङ्गेशोपाध्यायरघुनाथशिरोमणिविरचिताभ्यां
मणिदीधितिभ्यां सह,



श्रीकाञ्चीप्रतिवादिभयंकरानन्ताचार्येण
परिशोधितः

द्वितीयवारम् ।

काञ्च्यां श्रीसुदर्शनमुद्राक्षरशालायाममुद्र्यत ।